ॐ श्रीगणेशाय नमः श्रीपार्वत्युवाच ॐ देवदेव महादेव सर्वसतकलेश्वरः त्वत्प्रसादेन सकलं श्रुतं हर्षविवर्धनम् १ देव
दानवगंधर्वसुरासुरपन्नगाः सचराचरजंतूनां कथं सिद्धिर्महेश्वर २ श्रीईश्वरउवाच शृणु देवि परं गुह्यं ज्ञानानां ज्ञा
नमुत्तमम् येन सिद्ध्यन्ति ऋषयः सर्वदेवाश्च मानवाः ३ श्रीगुरुर्देवदेवेंद्रो दिव्यमूर्तिर्दिवीश्वरः स्वयंज्योतिःप्रकाशात्म
कर्त्ता हर्त्ता भवत्येकः अनंतोनंतलीलाश्च नानारूपजनेश्वरः सृष्टिकर्त्ता च सर्वेष्टदाता भोक्ता शिरोमणिः ५ योगेन्द्रो
ज्योतिरूपश्च सर्वजन्तुश्च व्यापकः तत्त्वश्रेष्ठः सर्वनिराकारपत्ना[illegible]यकः ६ आदिकर्त्ता अनादिश्च सगुणो निर्गुणः प्रभुः उत्पत्तिस्थितिलयाकारी
भक्तात्मा चाखिलेश्वरः मंत्रमूर्तिर्महाशक्तिः सर्वस्यार्थस्य सूचकः निर्बुद्धिसिद्धिदाता चान्धस्य ज्योतिःप्रकाशनः ८ ज्ञानमूर्तिर्निराधारश्चाधा
रः परमेश्वरः परंब्रह्म परं शून्यमगम्यं च परात्परः अत्यन्तालेपपुरुषो लक्ष्यभेदविवर्जितः रोमैकस्याण्डकोटिः स्यात्सर्वस्य प्रतिपालकः ९ ॐ गु
रवे नमः ॐ नमः श्रीगुरुदेवाय परमपुरुषाय निरंजनाय स्वाहा ॐ नमः श्रीगुरुदेवाय सर्वदेववश्यकराय सर्वारिष्टविनाशाय सर्व
मानयमनत्र मंत्रछेदनाय सर्वरोगमर्दनाय त्रैलोक्यवशीकराय स्त्रीपुरुषमोहनाय गुरुं ह्रौं ह्रीं ह्रौं स्वाहा ॐ गुरुदेवाय विद्महे परमगुरुरूपाय धीमहि त
न्नो गुरुः प्रचोदयात् ३ श्रीगुरुर्ब्रह्मरन्ध्रस्थाज्ञायत्रीच ललाटके हृद्देवश्चाम्बके पृष्ठे हृदये विष्णुदेवता ११ नाभिकायां वामदेवो नेत्रयोश्च
नवरुणवामस्कंधे दूरदर्शकौ कर्णयोः श्रुत्यधिपतयोरुनमाक्षे शिवीश्वरः दक्षस्कन्धे यमः सदा दक्षहस्ते सर्वदेवो वामहस्ते च सिद्धयः दक्षहस्तांगुलीषु
तु तीर्थं वामांगुलीमहत् पृष्ठस्था हैमहामाया उदरे वै नदी सदा कंठे धर्मदेवता च नस्यां धावन्देवता मुखे सरस्वती तिष्ठेद् दन्तेषु योगि
नीगणाः ओष्ठयोः किन्नराः सर्वे जिह्वा विद्याधरः सदा गंधर्वा दंतसंघोच्च गात्राणि वज्रमेव च दक्षहस्ते च देवास्तु पितरो वामके सदा
नाभौ च भूमिदेवता च दिक्पाला दक्षपृष्ठके वामपृष्ठे गणाश्चैव स्यात् मेधा वै दक्षपंजरे पंजरे वामके सुराः दक्षऊरौ समुद्रकः वामऊरौ व्याप्ति
मन्तुकं च पृथ्वी सदा स्थिता इंद्रऊरौ शुक्रकल्पवृक्षो दक्षके पुच्छ शरण्यके वामकसंचपापस्यादामतेषु गणाः सदा अश्विषु पर्वताः सर्वगुदे
नाराधिपो मतः न विष्णुनागलोकाः स्यान्त्वसंधिषु पदिता दक्षजंघे भैरवो स्याद्वामजंघे च देवपः गुल्फयुवैराट सर्वे गुल्फयोः
रात्रसाः सदा पादपृष्ठे कामधेनुः पुत्र विभूतनायकाः अंगुलीषु च कीमयः कूर्मः पादतलेष्वेव रोमस्वजाः स्युतिः नृणां नाना
रूपमवर्तते एवं वैराटरूपश्च गुरुर्देवो निरंजनः परानंदः परं स्वस्थं परं पूर्णप्रकाशनं परं ज्योतिः परं तत्त्वं परं रसः परात्पर
श्रीईश्वरउवाच ॐ शृणु देवि परं तत्त्वं गुह्यानां गुह्यमुत्तमं दुर्लभं देवदेवानां सर्वेषां प्राप्तिदायकं करुणात्मा कृपासिद्धुधि

गु॰ प॰ न्नचिंतामणिः सदा विमथ्य चतुरो वेदान् मंत्रशास्त्रमनेकधा पिबंति मोहिता लोकाः स्वर्गकामा गुरुतत्त्वविडिंताः नमस्ते गुरुदेवाय परमानंद
१ रूपिणे रक्षकाय भक्तानां हृद्धिताय वै नमः परमानंदरूपाय वै नमः नमः सर्वात्मकाशाय विश्ववीर्याय वै नमः विश्वाधाराय वै न
मः विश्वकाराय वै नमः नमस्तेस्तु अनंताय आद्यानंताय वै नमः निरंजननिराकार नमः संसारपालिने स्तोत्रं वै गुरुदेवस्य सर्वसुखाढ्
यतंत्रं परं दीपकं मंत्रतंत्राणां सर्वकिल्बिषनाशनं सर्वविषादहरणं सर्वरोगादिनाशनं व्याघ्रचोरादिशमनं मारीभयविनाशनं
संग्रामे शत्रुसंघे च सागरे पर्वते वने श्मशाने दुःस्वप्ने च भयनाशकरं परं यः पठते नित्यं पाठयेद्वा समाहितः विमुच्य सर्व
पापेभ्यो निर्भयो जायते नरः ज्ञानवान् धनवान् साधुर्योगीशो जायते चिरात् यं यं चिंतयते कामान् तं तं प्राप्नोति निश्चितं लभते सर्वसिद्धिं च
त्रैलोक्यवशमानयेत् सर्वेषां हीश्वरो भूत्वा गुरुसान्निध्यतां व्रजेत् लक्षैकजाप्यतो मंत्रपुरश्चर्याविधिः स्मृतः सकलां सिद्धिमा
प्नोति गुरोः पादाब्जचिंतनात् गुरुर्माता पिता भ्राता सखा चैव सहोदरः तत्त्वं परं गुरोर्नास्ति सर्वदेवमयो यतः पठंति वेदचत्वारो
मंत्रशास्त्रमनेकधा गुरुमंत्रविहीनानां सिद्धिर्नैवोपजायते नातः परतरो देवो नातः परतरं तपः नातः परतरो यज्ञस्तीर्थं ना
तः परः शोचितः निंदकः पातकी चैव कृतघ्नो गोघ्न एव च मुच्यते सर्वपापेभ्यो सकृदुच्चारणादिह काशीक्षेत्रं निवासस्त
व चरणजलं जाह्नवी श्रीगुरोर्नः साक्षाद्विश्वेश्वरस्त्वं तव वचनमिदं तारकं ब्रह्मबोधः त्वच्छ्रीपादांकिता भूरिह भवति गया
त्वत्समेतः प्रयागः त्वत्तोन्यत्तीर्थदेवं क्वचिदपि च वयं न प्रतीमः पृथिव्यां संसारेस्मिन्महोल्लरणैकहेतुं त्वदेगुरुत्नित्य शिवस्त्व
भाव रक्षांसि ये पंचपदं कजानां तीर्थाभिषेकश्रियमावहंति श्रीमद्गुरुं परमानंददेवं देवं स्वानंदविग्रहं यस्य सान्निध्यमात्रेण
चिदानंदायते तनुः ॥ इति श्रीरुद्रयामले तंत्रे पार्वतीशिवसंवादे परमसद्गुरोः पटलं समाप्तम् ॥ ॥ शुभम् ॥ ॥ ॥